# स्वरशिक्षा

प्रणम्य वेदपुरुषं वक्ष्यामि स्वरसंगृहः
उदात्तश्चानुदात्तश्च स्वरितः प्रचयः स्वराः १
अक्षराणि समाश्रित्य दृश्यन्ते वर्णराशिषु
दीर्घत्वं यच्च देहस्य त्वङ्गानां दृढगात्रता २
कर्णाकाशस्य कृशता निमित्तान्युच्च जन्मनि
ह्रस्वत्वं यच्च देहस्य त्वङ्गानामृदुता च या ३
कर्णाकाशमहत्वञ्च नीच जन्मनि हेतवः
कारणं स्वरितोत्पत्तौ समाहारोऽनयोर्भवेत् ४
उदात्तश्रुतिरेवेति प्रचयस्य प्रसिद्धता
एते स्वराः प्रवर्त्तन्ते देवेष्वेव विशेषतः ५
उच्चोऽग्निर्निहते वायु स्वरितः सूर्य एव च
ते देवा वह्निरूपेण प्रवर्त्तन्ते श्रुतौ त्रिधा ६
इहैव पवमानोऽग्निर्मद्ध्यमोऽग्निस्तु पावकः
अमुष्मिन्नेष विप्रैस्तु लोकोऽग्निश्रुतिरुच्यते ७
अर्चिर्विद्युद्रश्मीकेशैः केश्यग्निरिति पठ्यते
विप्रस्य दक्षिणे हस्ते सोऽग्निर्वसति सर्वदा ८
तत्रैव सर्वतीर्थानि सर्वदेवाः स वासवाः
वेदास्त्वङ्गुलिमाश्रित्य प्रवर्त्तन्ते स्वराश्रयाः ९
परमात्मा च तत्रैव तदङ्गुष्ठसमाश्रितः
सदा नृत्यति वेदेषु शब्दब्रह्माभिधः परः १०
वेदाद्ध्यायी द्विजस्तस्मात् गोकर्णसदृशे करे
शिरोहृत्कण्ठमूलेषु सर्वास्ये संभवा क्रमात् ११
ब्रह्मक्षत्रियवैश्यान्त्यवर्णानुच्चादिकान्स्वरात्
तर्जन्यादौ कनिष्ठादौ तथैवानामिनान्तिमे १२
मद्ध्यमाङ्गुलिमद्ध्ये च ह्यङ्गुष्ठेनैव दर्शयेत्
उदात्तान्निहतः स्वारः स्वरितात् प्रचयो भवेत् १३

उदात्तात् स्वरितः पूर्वं निहतः परतोऽपि वा
जात्योऽभिनिहितक्षैप्रः प्रश्लिष्टान्यस्वरोऽपि वा १४
निहतत्वमानान्यमापद्यते स्वरम्
उदात्तात् परतो नास्ति प्रचयः पूर्वतोऽपि वा १५
स्वरितः प्रचयादूर्ध्वं निहतात् प्रचयः परः
स्वरितादनुदात्तानां परेषा प्रचयो भवेत् १६
उदात्तस्वरितोपान्त्यं निहतावधिसर्वतः
परिग्रहेऽनुदात्तानां नोदात्तस्वरिते परे १७
तनूनपाच्छचीपत्यो स्वरितत्वं परिग्रहे
नीचेन स्वरितस्वारमेकी भावे तु गच्छति १८
नीचं नीचस्त्रिभिश्चोच्चमुच्चत्वमधिगच्छति
यकारश्च वकारश्च व्यञ्जनैस्सह संयुतौ १९
अपूर्वो नीचपूर्वो वा जात्यास्तत्र स्वरो भवेत्
इ उ वर्णौ यदोदात्तावापद्येते यवौ क्वचित् २०
अनुदात्तोदये नित्यं विद्यात् क्षैप्रस्य लक्षणम्
एदोतोरुच्चयोर्यत्र नीचोऽकारः परो यदि २१
एकी भावो भवेद्यत्र स्वरोऽभिनिहिताभियः
इकारः पूर्वमुच्चश्चेदकारो निहते परे २२
प्रश्लिष्टमाहुराचार्या स्वरा वर्णविदस्तथा
अवग्रहात् परो यत्र स्वरितः स्यादनन्तरः २३
तिरोविरामं तं विद्यादुदात्तो यद्यवग्रहः
उदात्तपूर्वं यत्किञ्चित् छन्दांसि स्वरितं भवेत् २४
एष सर्वो बहुस्वारः तैरोव्यञ्जनसंज्ञकः
स्वरे चेत्स्वरितं यत्र विवृत्या यत्र संयुते २५
पादवृत्तस्सविज्ञेयो विवृत्या नीचयत्स्वरम्
जात्योऽभिनिहितस्वारः क्षैप्रः प्रश्लिष्ट एव च २६

एते स्वराः प्रकम्पन्ते यत्रोच्चस्वरितोदयः
उदात्तपूर्वह्रस्वे स्युः नीचपूर्वास्ततोऽन्यतः २७
अनुदात्ते क्रमं कुर्यात्स्वरितं ह्यवलम्बयेत्
पुनर्निहतमागच्छेन्नीचकम्पविधिस्ततः २८
उदात्तेनारभेत्पूर्वं निहतेन समापयेत्
ह्रस्वकम्पः स विज्ञेयः क्वा आवोऽश्वा क्वा इति निदर्शनम्
२९
जात्यः स्वरः स जात्येन श्रुष्ट्यग्ने क्षैप्र उच्यते
तेऽवर्द्धन्ताऽभिनिहितः प्रश्लिष्टो हीन्द्र गिर्वणः ३०
तिरोविरामं विष्कुम्भिते तैरोव्यञ्जन ऊतये
पादवृत्तः क ईं वेद स्वरसन्निधिदर्शनम् ३१
स्वरो वर्णोऽक्षरो मात्रो विनियोगार्थ एव च
मन्त्रजिज्ञासमानेन वेदितव्यं पदे पदे ३२
मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्
३३
हस्तहीनन्तु योऽधीते स्वरवर्णं विवर्जितम्
ऋग्यजुस्सामभिर्दग्धो वियोनिमधिगच्छति ३४
हस्तेन वेदं योऽधीते स्वरवर्णार्थसंयुते
ऋग्यजुस्सामभिः पूतो ब्रह्मलोके महीयते ३५

इति स्वर शिक्षा समाप्ता

Courtesy of University Manuscript Library, Trivandrum:
"Svara Śikṣā," Manuscript #4254 in *Alphabetical Index of the Sanskrit Manuscripts in the University Manuscript Library,* Trivandrum--Trivandrum: Alliance Printing Works, 1957. Palm Leaves, Malayālam script, 4 folios.